# Shri Bhairava Tandava Stotram

# श्रीभैरवताण्डवस्तोत्रम्



## Sanskrit Document Information

Text title : bhairavatANDavastotram

File name : bhairavatANDavastotram.itx

Category : shiva

Location : doc_shiva

Transliterated by : Gopal Upadhyay gopal.j.upadhyay at gmail.coM

Proofread by : Gopal Upadhyay, PSA Easwaran psaeaswaran at gmail.com

Latest update : January 15, 2018

Send corrections to : Sanskrit@cheerful.com



January 16, 2018

*sanskritdocuments.org*

# श्रीभैरवताण्डवस्तोत्रम्



श्रीगणेशाय नमः ।
श्रीउमामहेश्वराभ्यां नमः ।
श्रीगुरवे नमः ।
श्रीभैरवाय नमः ॥

अथ श्रीभैरवताण्डवस्तोत्रम् ।
ॐ चण्डं प्रतिचण्डं करधृतदण्डं कृतरिपुखण्डं सौख्यकरं
लोकं सुखयन्तं विलसितवन्तं प्रकटितदन्तं नृत्यकरम् ।
डमरुध्वनिशङ्खं तरलवतंसं मधुरहसन्तं लोकभरं
भज भज भूतेशं प्रकटमहेशं भैरववेषं कष्टहरम् ॥ १॥

चर्चितसिन्दूरं रणभूविदूरं दुष्टविदूरं श्रीनिकरं
किङ्किणिगणरावं त्रिभुवनपावं खर्प्परसावं पुण्यभरम् ।
करुणामयवेशं सकलसुरेशं मुक्तसुकेशं पापहरं
भज भज भूतेशं प्रकटमहेशं श्रीभैरववेषं कष्टहरम् ॥ २॥

कलिमलसंहारं मदनविहारं फणिपतिहारं शीघ्रकरं
कलुषं शमयन्तं परिभृतसन्तं मत्तदृगन्तं शुद्धतरम् ।
गतिनिन्दितकेशं नर्तनदेशं स्वच्छकशं सन्मुण्डकरं
भज भज भूतेशं प्रकटमहेशं श्रीभैरववेशं कष्टहरम् ॥ ३॥

कठिनस्तनकुम्भं सुकृतं सुलभं कालीडिम्भं खड्गधरं
वृतभूतपिशाचं स्फुटमृदुवाचं स्निग्धसुकाचं भक्तभरम् ।
तनुभाजितशेषं विलमसुदेशं कष्टसुरेशं प्रीतिनरं
भज भज भूतेशं प्रकटमहेशं श्रीभैरववेशं कष्टहरम् ॥ ४॥

ललिताननचन्द्रं सुमनवितन्द्रं बोधितमन्द्रं श्रेष्ठवरं
सुखिताखिललोकं परिगतशोकं शुद्धविलोकं पुष्टिकरम् ।
वरदाभयहारं तरलिततारं क्षुद्रविदारं तुष्टिकरं

भज भज भूतेशं प्रकटमहेशं श्रीभैरववेषं कष्टहरम् ॥ ५॥

सकलायुधभारं विजनविहारं सुश्रविशारं भ्रष्टमलं
शरणागतपालं मृगमदभालं सञ्जितकालं स्वेष्टबलम् ।
पदनूपुरसिञ्जं त्रिनयनकञ्जं गुणिजनरञ्जन कुष्टहरं
भज भज भूतेशं प्रकटमहेशं श्रीभैरववेषं कष्टहरम् ॥ ६॥

मर्दयितुसरावं प्रकटितभावं विश्वसुभावं ज्ञानपदं
रक्तांशुकजोषं परिकृततोषं नाशितदोषं सन्मतिदम् ।
कुटिलभ्रुकुटीकं ज्वरधननीकं विसरन्धीकं प्रेमभरं
भज भज भूतेशं प्रकटमहेशं श्रीभैरववेषं कष्टहरम् ॥ ७॥

परिनिर्जितकामं विलसितवामं योगिजनाभं योगेशं
बहुमद्यपनाथं गीतसुगाथं कष्टसुनाथं वीरेशम् ।
कलयन्तमशेषं भृतजनदेशं नृत्यसुरेशं वीरेशं
भज भज भूतेशं प्रकटमहेशं श्रीभैरववेषं कष्टहरम् ॥ ८॥

इति श्रीभैरवताण्डवस्तोत्रं सम्पूर्णम् ॥

Encoded by Gopal Upadhyay gopal.j.upadhyay at gmail.com
Proofread by Gopal Upadhyay, PSA Easwaran psaeaswaran at gmail.com

*Shri Bhairava Tandava Stotram*
pdf was typeset on January 16, 2018

Please send corrections to *sanskrit@cheerful.com*

